चनमनेन सूत्रेण क्रियते तत् सिद्धान्तिनो नानिष्टमित्यर्थः । स्वमतेन समाधत्ते * तस्मादिति * आद्ये अधिकरणे विचारस्वरूपमाह * तत्रेति * यद्यप्यध्ययनविधिसामर्थ्यादेवोद्भिच्चित्रादिशब्दानामप्यानर्थक्यं निराकृतं द्वेधापि च प्रामाण्योपपत्तेर्न द्वाराभावेन प्रत्यवस्थानं युक्तं, मत्वर्थलक्षणादेश्चानर्थक्याज्ज्यायस्त्वान्न तद्भयेनानर्थक्याङ्गीकरणं युक्तम् । आनर्थक्यासम्भवाच्चाप्रसिद्धस्याप्युद्भिच्चित्रादिशब्दस्य तृतीयागतकरणत्वबलात् करणत्वयोग्यद्रव्यविशेषवाचित्वस्य नामधेयत्वाभावे ऽवश्यङ्कल्प्यत्वाच्च । न पौष्णं पेषणं विकृतौ प्रतीयेतास्याचोदनात् प्रकृतौ इत्यादिवदुत्तरैर्विवक्षायाः प्राप्त्यर्थं सामान्यन्यायसिद्धस्यैव क्रियार्थत्वस्यानेकविचारान्तरितस्य स्मरणं क्रियतइति वाच्यं, तत्र ह्यग्निष्टोमप्रकरणादुत्कृष्टं सन्तर्दनं प्रथमप्रयोगाच्चोत्कृष्टः प्रवर्ग्यः सर्वत्रान्यत्र भवतीत्युक्ते तद्वत्पेषणमपि दर्शपूर्णमासप्रकरणादुत्कृष्टं किमविशेषाच्चरौ पशौ पुरोडाशे च भवत्युत चरावेवेत्युपस्थितस्य विचारस्यान्यत्र सङ्गत्यभावादिहैव वाक्यप्रकरणविरोधाविरोधचिन्ताप्रस्तावेन अवश्यकर्त्तव्यत्वात् तत्प्राप्त्यर्थं पेषणस्योत्कर्षाभिधानं युक्तम् । द्रव्यसंस्कारस्यापि च बर्हिर्लवनादेरङ्गप्रधानेषु समानविध्ये विचारिते स्वयं कर्तृकताप्यङ्गप्रधानेषु समाना न वेति विचारेण प्राप्तानामृत्विजां विनियोजिकायाः समाख्यायाः लिङ्गप्रकरणाभ्यां विरोधो ऽस्ति न वेति विचारिते ऽन्यत्रापि समाख्यायाः पूर्वैः सह विरोधाविरोधविचारे समाप्ते यत्प्रसक्त्या यो विचारस्तत्समाप्तौ स एव बुद्धिस्थो भवतीति बर्हिर्लवनादिविचारप्रसक्तानुप्रसक्तिसमाप्त्या बुद्धिस्थस्य बर्हिर्लवनादिविचारस्य यूपावटस्तरणबर्हिषि लवनमस्त्युत नेति शेषलक्षणसङ्गतोत्तरविवक्षया स्मरणं युक्तं, गुणविधिनामधेयाचिन्तायास्तु लक्षणा ऽसङ्गतत्वेनेह कर्त्तव्यत्वाभावात् भावार्थाधिकरणे चोद्भिच्चित्रादिशब्दानां फलपदान्वयनिरासेन यज्यन्वये ऽभिहिते किं गुणविधित्वेनैषान्तदन्वयो नामधेयत्वेन वेति प्रसङ्गादुभयथापि यज्यन्वयासम्भवे बलात्फलपदान्वयापत्तेस्तन्निरासार्थं भावार्थाधिकरणशेषत्वेनैव विचारोपपत्तेस्तत्समाप्तौ चैवमप्यपूर्वाभावाद्भावशब्देभ्यो ऽपूर्वं नामपदेभ्यो वेति चिन्ता न युक्तेति प्रकृताचिन्ताक्षेपेणापूर्वविचारस्यापि सङ्गत्युपपत्तेस्ताद्विवक्षयोद्भिदादिप्रामाण्यस्मरणमयुक्तं प्रामाण्यस्मारणेनैव प्रसक्तत्वाल्लक्षणासङ्गतस्यापि विचारस्य कर्त्तव्यत्वोक्तौ स्मारणात्कर्त्तव्यत्वं कर्त्तव्यत्वे च सति तत्सङ्गतिसि-

१ उत्तरविचारेति २ पु० पा० ।

द्ध्यर्थं स्मारणमितीतरेतराश्रयापत्तिरत एव च टुप्टिकायां केचिदानर्थक्येनोत्सूत्रं पूर्वपक्षं कुर्वन्ति सूत्रेण तत्परिहारमित्येतन्मतमुपन्यस्य तत्रानर्थक्यस्य पूर्वमेव सर्ववेदविषयस्य निराकृतत्वादिति स्वयमेव दूषितम् । तथापि नामधेयत्वे सति उद्भिच्चित्रादिशब्दानां धर्मप्रमोपयोगो ऽस्त्युत नेती चिन्ता क्रियमाणा न विरुध्यते । को धर्मः कथं लक्षण इति हि प्रकारवाचिना थमुप्रत्ययेन प्रामाण्यप्रकारो ऽपि लक्षणार्थत्वेनाभिहितः । यथोक्तम् * बृहट्टीकायाम् *

चोदनासूत्रनिर्दिष्टो यः प्रमाणपरिग्रहः ।
सप्रकारः स आद्येन लक्षणेन प्रपञ्चितः ॥

इति । किं प्रत्यक्षश्रवणमेव वेदस्य प्रामाण्यप्रकारो ऽथ मन्वादिस्मरणेनोपस्थापनमपीति सामग्रीगतप्रकारे तृतीयपादेन चिन्तिते किमप्रवृत्तप्रवर्त्तनस्तुतिविहितार्थप्रकाशनान्येव प्रामाण्यद्वाराण्युत नामधेयतापीति अवान्तरव्यापाररूपप्रकारान्तरचिन्तार्थो ऽयमारम्भो लक्षणपूर्वपादाभ्यां सङ्गच्छते । प्रामाण्यस्वरूपविषयत्वे त्वस्याश्चिन्तायाः प्रत्यक्षवेदविषयत्वात्स्मृतिविचारात्प्रागेव कार्यतापत्तेर्न स्मृतिपादानन्तरमारम्भो युक्तस्तस्मान्नामधेयानां धर्मप्रमोपयोगो ऽस्ति न वेति इह विचारार्थः । तत्सिद्ध्यर्थं चैषां विध्यादित्रयान्यतमान्तः पातो ऽस्त्युत नेति चिन्तनीयम् । त्र्यंशवेदातिरिक्तत्वे नामधेयानामनुष्ठानानौपयिकत्वेन धर्मप्रमायोगानुपपत्तेरिति नामधेयानर्थक्ये ऽप्याम्नायस्येति सूत्रं योजयन् पूर्वपक्षमाह * किं तावदिति[1] * ननु सर्ववेदविषयस्यानर्थक्यस्याध्ययनविधिबलेन तत्रैव सिद्धान्ते निराकृतत्वान्नामधेयानर्थक्ये ऽप्युद्भिच्चित्रादिशब्दानां गुणविधित्वेनापि प्रामाण्योपपत्तेर्मन्त्रार्थवादवत् पुनः प्रत्यवस्थानायोगात् नानर्थक्याशङ्का युक्तेत्याशङ्क्य नोद्भिच्चित्रादिशब्दानां स्वरूपेणानर्थक्यं विवक्षितं किं तु नामधेयत्वे सतीत्येतमर्थं दर्शयितुं वृद्धवाक्यमुदाहरति * आह चेति * यद्युद्भिच्चित्रादिपदं नामधेयत्वेन त्र्यंशाद्वेदादधिकमतिरिक्तमिष्यते ततो धर्मानुपयुक्तार्थाभिधायित्वाद्यानर्थक्यं प्रपद्यतइत्यर्थः । अनुपयुक्तं सदितिपाठे नामधेयत्वेन त्र्यंशाद्वेदादधिकं सदानर्थक्यं प्रपद्यतइत्यर्थः । ननु त्र्यंशवेदातिरेके ऽपि नामधेयत्वेनैव धर्मप्रमोपयोगो भविष्यतीत्याशङ्क्य * त्र्यंशेत्युक्तम् * ननु नामधेयत्वे ऽप्युद्भित्संज्ञको यागः कार्य इति विध्युद्देशान्तर्गतिसम्भवात् फलोद्देदनिमित्तोद्भित्संज्ञकत्वात् प्रशस्तो ऽयं याग इति चार्थवादान्तर्गत्युपपत्तेः संज्ञात्वेन

---

१ किं प्राप्तमिति २ पु० पा० ।

वानुष्ठेयसंज्ञियागप्रकाशनसामर्थ्यान्मन्त्रकार्योपपत्तेः कथमतिरेका-
२८।१।२ पत्तिरित्याशङ्क्याह * न हीति * यागानुष्ठेयताया यजेतेत्येतावता
सिद्धेरेतद्विधेयत्वेनैव च यागविशेषावधारणासिद्धेः साध्यांशाद्यभि-
धानेनैव विध्युद्देशान्तर्भावो वाच्यो न च नामधेयत्वे ऽन्यतमांशाभि-
धानं सम्भवतीत्याह * साध्येति * संज्ञायाः संज्ञिस्वरूपनिर्देशा-
र्थत्वेन प्राशस्त्यपरत्वाभावास्तुतिबुद्ध्यनुत्पादकत्वेनार्थवादातिरेकमु-
पपादयति * स्तुतीति * स्वरूपनिर्देशार्थत्वेनैव च कृतार्थत्वात् प्र-
योगार्हरूपाभावेन कर्मकालप्रयोज्यत्वाभावात् विभुत्वेन च कर्मणः
क्वांशे[1] प्रयोग इत्यज्ञानात् कर्मस्वरूपप्रकाशनार्थत्वायोगात् कर्माङ्ग-
भूतस्य चोद्भिदादिसंज्ञकस्य प्रकाशनार्हस्याभावान्न मन्त्रान्तर्गतिरि-
त्याह * कर्मेति[2] * उद्भिच्चित्रादिपदेषु अध्येतृभिर्मन्त्रशब्दाप्रयोगा
त् मुख्यमन्त्रत्वशङ्कानुपपत्तेस्तत्कार्यकारित्वमात्रेण मन्त्रान्तर्गतिर्वा-
च्येति सूचयितुं कार्यशब्दः । ननु विध्यादित्रयातिरेके[3] ऽपि नामधे-
यस्य गुणफलोपबन्धोपयोगित्वेनार्थवत्त्वं भविष्यतीत्याशङ्क्याह *
न चेति * विधित एव यागविशेषावधारणसिद्धेर्गुणफलोपबन्धो-
ऽपि सेत्स्यतीत्याशयः । उपसंहरति * इतीति * सूत्रोक्तं सिद्धान्त-
माह * अत्रेति * उक्तेनाध्ययनविधिसामर्थ्यलक्षणेन हेतुना सर्वस्य
वेदस्य त्र्यंशत्वावधारणात् यदुद्भिच्चित्रादिशब्दस्य नामधेयत्वे स-
त्यंशत्रयातिरेकापत्तेरप्रामाण्यं पूर्वपक्षिणोक्तं तन्न सिध्यति नामधे-
यस्यापि वेदत्वेनांशत्रयान्तःपातावसायात् इत्यर्थः । एतेन श्लोके-
नोक्तमस्माभिरित्याद्यन्यतमस्मै प्रयोजनाय भवेयुरित्यन्तं भाष्यमा-
द्यसूत्रव्याख्यानार्थमिति सूचितम् । नामधेयप्रामाण्यविचारसिद्धा-
न्ताभिधानार्थमप्येतत्सूत्रं गुणविधिनामधेयविचारपूर्वपक्षे ऽध्य-
ध्याहारेण शक्यं योजयितुमिति प्रदर्शनायादौ भाष्यकृता द्वितो-
यविचारोपक्रमः कृतः । वार्त्तिककृता त्वध्याहाररहितस्य सूत्रस्य
पूर्वपक्षाभिधानासामर्थ्यमुक्तम् उभयाभिधानशक्तस्यापि सूत्रस्य वा-
क्यभेदापत्तेरुभयत्र तात्पर्यासम्भवमभिप्रेत्य द्वितीयाधिकरणपूर्वप-
क्षस्यानुमितत्वोक्तिरिति भाष्यवार्त्तिकयोरविरोधः तत्र तावदित्या-
दिभाष्यं नामधेयस्य मन्त्रार्थवादान्तर्भावशङ्कानिराकरणार्थं तदन्त-
र्गतावप्यन्यतमांशान्तर्गतिसिद्धेरतदर्थकमित्याह * यदेति * नि-
र्द्धारितरूपांशविशेषान्तर्गतिं विनान्यतमांशान्तर्गत्यनिर्वाहात् । यदा

१ क्वांशेति अधिकं २ पु० पा० ।
२ कर्माङ्गभूतेति २ पु० पा० ।
३ आधिक्ये ऽपीति २ पु० पा० ।

यस्मात्कारणात् तन्नामधेयं विध्याद्यर्थत्रयान्यतमार्थमित्युक्तमपि विशेषानिरूपणात् निर्वाहमगत्यैव स्थितं तदा तस्मात्कारणात् किमर्थमिति विशेषविचारः कर्त्तव्य इत्यर्थः । न त्वेकस्मिन्विचारे पर्यवसिते विचारान्तरारम्भोक्तिरेषा तथा सत्यधिकरणत्रयापत्तेर्द्वयोरधिकरणयोरित्यनुपपत्तिप्रसङ्गात् तत्र तावदिति भाष्यं व्याचष्टे * न तावदिति * एतदेवाक्षेपपूर्वकमुपपादयति * कथं पुनरिति * नावयववाच्ययं शेषशब्दः किं तूपयुक्तेतरवाची वायव्यं श्वेतमित्यादेर्हि स एवैनं भूतिं गमयतीत्यन्तस्यैकस्य वाक्यस्य मध्ये भूतिकामान्तेभ्यः साध्यादिप्रतिपादनेन विधेयार्थाभिधानोपयुक्तेभ्यः पदेभ्यः परिशिष्टानां वायुर्वै क्षेपिष्ठेत्यादीनामर्थवादतेष्यते । ननु विधिवाक्यावयवत्वरूपैकवाक्यत्वमात्रेण भूतिकामादिपदानामप्यर्थवादत्वापत्तेर्नामधेयानां च विधिविषयविशेषावधारणार्थत्वेन विधेयार्थाभिधानोपयुक्तत्वात् न परिशिष्टतास्तीत्यर्थः । ननु विधिविशेषादेव विधेयविशेषावधारणसिद्धेर्नामधेयानां तादर्थ्यासम्भवात् परिशिष्टता भविष्यतीत्याशङ्क्याह * तदिति * उत्पत्तिवाक्ये विधेयविशेषावधारणस्यान्यतः सिद्धावपि समे यजेतेत्यादौ दर्शपूर्णमासादिनामधेयं विना विशेषावधारणासिद्धेर्वक्ष्यमाणत्वात् विध्युद्देशान्तर्गतिस्तावत्सम्भवत्येव न च तत्सम्भवे स्तुत्यर्थत्वाङ्गीकरणं युक्तमिति प्रधानं विधिरङ्गं स्तुतिस्तत्र प्रधानविशेषणसम्भविनस्तद्गामित्वमेव न्याय्यमित्यत्रोक्तमित्यर्थः । गुणगुणिसम्बन्धकीर्त्तनात्मकत्वाच्च स्तुतेर्न गुणमात्रैकवाचिनैकेन पदेनोपपत्तिरित्याह * न चेति * ननु संज्ञया गुणिभूतस्य संज्ञिनोऽर्थातूपात्तस्योपस्थापनोपपत्तेः स्तुतिः सेत्स्यतीत्याशङ्क्याह * न चेहेति * संज्ञायाः संज्ञिव्यवहारार्थत्वेन स्तुतिपरत्वायोगान्नेह नामधेये स्तुतिप्रतिपत्तिः सम्भवतीत्यर्थः । ननु नामधेयस्यापि फलोद्भेदनादिगुणयोगनिमित्तत्वात् सहस्राक्षादिवत्स्तावकत्वोपपत्तिरित्याशङ्क्याह * यद्यपीति * संज्ञायाः संज्ञिव्यवहारार्थत्वेन कृतार्थायाः संज्ञायाः स्तुत्यर्थत्वमेव तावत्स्वमनीषिकामात्रेण कल्प्यं न तु युक्तियुक्तं कथं चित्कल्पितमप्येतत्फलोद्भेदनस्य कर्त्तेति धातूपपदप्रत्ययार्थसमुदायस्य तृतीयान्यार्थत्वप्रतीतेः प्रातिपदिकार्थप्राधान्यविघाताद् बाध्येतेत्यर्थः । न मन्त्र इति । मन्त्रान्तर्गतिशङ्कानिराकरणार्थं भाष्यं व्याख्यातुम्मन्त्रस्वरूपनिराकरणे तावत्प्रायिकस्यास्यन्तत्वादिलक्षणस्याभिधानचोदकत्वस्य चाध्येतृप्रयोगस्य च व्यापकस्याभावं सूचयितुं हेतुमाह

१ निरासार्थमिति २ पु० वा० ।

* न चास्येति * ननु स्वरूपतो मन्त्रत्वाभावे ऽप्यूहप्रवरनामधेयवत् प्रयोजनाकाङ्क्षायां प्रयोजनान्तरायोगेनानुष्ठेयस्मारकत्वावगमान्मन्त्रकार्यकरत्वेनौपचारिकं मन्त्रत्वं भविष्यतीत्याशङ्क्य स्वयं तावन्निराकरोति * न चेति * पदार्थमात्रस्यानुष्ठेयत्वात् प्रयोजनत्वानुपपत्तेर्वाक्यार्थस्यैवानुष्ठेयत्वेन प्रयोजनत्वादेकस्य च पदस्य वाक्यार्थप्रतिपादनासामर्थ्यात् प्रयोजनाकाङ्क्षैव तावन्नास्ति सत्यामपि वा प्रयोजनाकाङ्क्षायां स्मारकत्वं न युक्तं करणत्वप्रतीत्या स्मरणार्हत्वापादकप्रातिपदिकार्थप्राधान्यबाधादित्यर्थः । एतच्च ब्राह्मणैकवाक्यीभूतस्य कर्मकाले स्वतन्त्रप्रयोज्यत्वाभावान्मन्त्रकार्यकारित्वानुपपत्तेर्मन्त्रकार्यकरत्ववादिनोद्भिदादिनामधेयानां स्वातन्त्र्यमवश्याभ्युपगन्तव्यम् इत्यापाद्यैकपदत्वमुक्तम् । वस्तुतस्तु धातुसामानाधिकरण्यं विना नामधेयत्वायोगात् भिन्नवाक्यत्वे प्रकारान्तरेणोपयोगानुपपत्तेरानर्थक्यस्यापरिहार्यत्वादिष्टमेवैकवाक्यत्वम् । अत एव सिद्धवद्वायुक्षेपिष्ठादिवदेकवाक्यतावगम्यतइत्युक्तम् । अनङ्गीकृतनामधेयत्वस्य तूद्भिदादिपदस्वरूपस्यार्थवादत्वनिराकरणे सत्यसावेकवाक्यत्वशङ्का तदङ्गीकारेण च विध्युद्देशान्तर्गत्या परिहारो न कथं चिद्युज्यते । यदा च मन्त्रकार्यकरत्वाङ्गीकरणे ब्राह्मणैकवाक्यत्वानुपपत्तेः स्वतन्त्रैकपदता पद्यते तदा सामानाधिकरण्याभावेन नामधेयत्वायोगात् तदभिधेयस्य चार्थस्य वाक्यान्तरेण कर्मण्यविधानात् प्रयोगसमवेतार्थाभावात्स्मारकत्वं न युक्तमित्याह * न चैतदिति * अनेन चैवं जातीयकस्येति भाष्यमुद्भिच्चित्रादिशब्दानां नामधेयत्वे तद्वाच्यस्य प्रधानकर्मण एव प्रकाशनीयस्य सद्भावादयुक्तमाशङ्क्यापाद्योक्त्या व्याख्यातं यद्वा कर्मणो विभुत्वेनास्य क्कांशे प्रयोग इत्यज्ञानात् कर्मस्वरूपप्रकाशनार्थत्वानुपपत्तेः।कर्माङ्गप्रकाशनार्थत्वं वाच्यं न चैतदभिधेयः कर्माङ्गभूतो ऽर्थो ऽस्तीत्याशयः । नन्वसमवेतार्थत्वे ऽपि स्तोत्रशस्त्रमन्त्रवदङ्गत्वं भविष्यतीत्याशङ्क्याह * न चेति * स्तोत्रादिसाधनत्वेन विधानाभावात् प्रकरणपाठेनैषां कर्माङ्गप्रकाशनेनैव विनियोगो वाच्यः । न चासौ सम्भवतीत्याशयः । ननूद्भिदादिशब्दवाच्यस्य खनित्रादेर्मन्त्रवर्णात् कर्मणि समवायः कल्पयिष्यते ऽत आह * मान्त्रवर्णिकेति * चित्राग्निहोत्रादिशब्दानां द्रव्यवाचित्वानाशङ्कनादुपलक्षणार्थो द्रव्यशब्दो द्रष्टव्यः श्रुत्यविनियुक्तत्वाच्चास्य स्वार्थसमवायकल्पकत्वं नास्तीत्याह * न चेति * सम्भवत्यपि नामधेयत्वे कर्मस्वरूपप्रका-

शनार्थत्वे च ब्राह्मणाद्विच्छिन्नस्यैकपदमात्रस्य मन्त्रत्वानाशङ्कनात् तादृशस्य चाख्यातान्वयं विना नैराकाङ्क्ष्याभावान्न कर्मकालप्रयोज्यत्वं सम्भवतीत्याह * न चेति नन्वध्याहारेण निराकाङ्क्षीकृत्य कर्मकालप्रयोज्यत्वं भविष्यतीत्याशङ्कां निराकुर्वन् कर्मकालाप्रयोज्यत्वमेवोपसंहरति * अतश्चेति * अतः साकाङ्क्षत्वेनाप्रयोगार्हत्वान्न कर्मकाले प्रयोगः सम्भवति न चाध्याहारेण निराकाङ्क्षीकृत्य प्रयोगो ऽविनियुक्तत्वेन प्रत्यक्षविनियोगान्यथानुपपत्तिकल्प्याध्याहारायोगादित्यर्थः । नामधेयत्वेन च प्रत्यक्षब्राह्मणैकवाक्यत्वप्रतीतेर्न श्रुताध्याहारेण निराकाङ्क्षीकरणं युक्तमित्याह * स्फुटं चेति * मन्त्रानन्तर्गतिमुपसंहरति * इतीति * पारिशेष्यादिति २८२।२ भाष्यं मन्त्रार्थवादान्तर्गत्यसम्भवे ऽपि नामधेयत्वोपपत्तेः पारिशेष्याद् गुणविध्यसिद्धेरयुक्तमाशङ्क्य समाधातुमाह * तस्मादिति * नामधेयस्य विध्युद्देशान्तर्गतिमात्रं पारिशेष्येणाभिमतं गुणग्रहणं तूत्तराधिकरणापातनिकार्थमित्याशयः । विध्युद्देशान्तर्गतस्यैव नामधेयस्य गुणविधिर्नामधेयं वेत्येवं विचारः क्रियतइति भावे लकारः विधेयाङ्गसमर्पकत्वाभिप्रायो गुणविधिशब्दः नामधेयस्य च विध्युद्देशान्तर्गतेर्न नामधेयं विधायिष्यतइत्येतद्भाष्यव्याख्याने विस्तरेणोपपादयिष्यमाणत्वात् तदवष्टम्भेनेह सिद्धवदभिधानम्।उद्भिदादिशब्दानां च नामधेयत्वं याज्ञिकप्रसिद्ध्यैव सिद्धं स एष यज्ञः पञ्चविधो ऽग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुः सोम इत्यादिलिङ्गदर्शनैश्चावधारितम् इत्यविचारितसिद्धमङ्गीकृत्य नामधेयत्वस्य धर्मप्रामाण्यप्रकारता ऽस्त्युत नेत्याद्येनाधिकरणेन विचारिते क्वास्ति नामधेयं क्व वा नेति कोष्ठशोधनिकार्थमुत्तरः प्रपञ्चः । सो ऽपि वाक्यार्थव्याख्यानत्वेन प्रमाणलक्षणासङ्गतिप्रसङ्गान्नोद्भिदादिशब्दो गुणविधिर्नामधेयं वेत्येवं रूपः । किं तु यथा सर्ववाक्यशेषाणाम् आनर्थक्यनिराकरणेनार्थवादत्वे ऽर्थवादाधिकरणेनैव सिद्धे तद्दृढीकर्त्तुं विधित्वाशङ्कानिराकरणायोत्तराधिकरणद्वयं तथोद्भिदादिशब्दानां याज्ञिकप्रसिद्ध्यवधारितेन नामधेयत्वेन धर्मप्रमोपयोगे साधिते प्रसिद्ध्यादिहेतुकेन गुणविधित्वेनैव धर्मप्रमोपयोगासिद्धेः किं क्लिष्टेन नामधेयत्वेनेत्याशङ्क्य नामधेयत्वमेव दृढीकर्त्तुं गुणविधित्वाशङ्कानिरासायोत्तराधिकरणचतुष्टयं। ततो वाजपेयाधिकरणे तन्त्रसम्बन्धेन विशिष्टविधिसम्भवाद् गुणविधिपक्षोक्तमत्वर्थलक्षणादिदोषपरिहारेण प्रत्यवस्थानमाशङ्क्य वैरूप्यात्तन्त्रसम्बन्धानुपपत्तेर्दोषपरिहारासम्भवेन गुणविधित्वनिराकरणे दृढीकृते विशिष्टवि-

धावाख्यातोपपदार्थयोर्द्वयोर्विधानात्सन्निकृष्टविध्यसम्भवनिबन्धनत्वाच्च विप्रकृष्टविधेर्युगपत्सम्भवासम्भवविरोधान्न क्वापि विशिष्टविधिः सम्भवतीत्याशङ्क्याग्नेयाधिकरणे विशिष्टविधौ व्युत्पादिते बर्हिरादिशब्दाः संस्कारनिमित्ताः जातिनिमित्ता यौगिका वेत्यधिकरणत्रयेण प्रसङ्गाद्विचारिते प्रासङ्गिकसमाप्तया बुद्धिस्थस्य विशिष्टविधिव्युत्पादनस्य प्रयोजनमुत्पत्तिशिष्टबलीयस्त्वं वैश्वदेवशब्दस्य गुणविधित्वशङ्कानिराकरणार्थं व्युत्पाद्याष्टाकपालादिशब्दानामेकवाक्यगतत्वेनोत्पत्त्युत्पन्नशिष्टत्वाविभागाभावाद् गुणविधित्वमाशङ्क्याष्टत्वादीनां परस्परविरोधित्वेनैकवाक्यविधानायोगाद् बलाद्वाक्यभेदप्रसक्तेरुत्पत्तिशिष्टद्वादशत्वावरुद्धे यागे ऽष्टत्वादिविध्ययोगादष्टाकपालादिशब्दैर्गुणवृत्त्या द्वादशकपालस्तुतिरिति वैश्वानराधिकरणे ऽभिहिते प्रसङ्गाद् गुणवृत्तित्वलक्षणं तत्सिद्धिसूत्रेणोक्ता यथा विध्युद्देशान्तर्गतस्यापि उद्भिदादिपदस्य नामधेयरूपेण प्रकारान्तरेण धर्मप्रमोपयोगित्वं तथा वाक्यशेषस्यापि स्तावकत्वातिरेकेण सन्दिग्धनिर्णायकत्वेनेत्युक्ताधिकरणेनोक्ते स्रुवाधिकरणे वाक्यशेषवत् सामर्थ्यस्यापि सन्दिग्धनिर्णायकत्वेन धर्मप्रमोपयोगव्युत्पादनात् सकलस्य पादस्य प्रमाणलक्षणसङ्गत्यविघातः । भाष्यानुसारेणोद्भिदादिशब्दानां गुणविधित्वेन धर्मप्रमोपयोगित्वं नामधेयत्वेन वेत्युभयथा प्रामाण्यमङ्गीकृत्य प्रकारविशेषव्युत्पादनार्थापि गुणविधिनामधेयचिन्ता प्रकारस्यापि लक्षणार्थत्वात् न लक्षणसङ्गतिं विहन्ति प्रामाण्यविषयविशेषनिरूपणार्थेयं गुणविधिनामधेयचिन्ता नप्रकारविशेषनिरूपणार्थेति परव्याख्यादूषणार्थस्तु वार्त्तिककारीयो यत्न इति सर्वमनवद्यम् ॥ उद्भिद्गुणतेत्यादिद्वितीयाधिकरणपूर्वपक्षभाष्यं तात्पर्यतो व्याचष्टे * तत्र तावदिति * ननूद्भिदादिशब्दानां लोके खनित्रादावप्यप्रसिद्धत्वादवयवव्युत्पत्त्या तु कर्मण्यपि प्रवृत्तिसम्भवात् कथं प्रसिद्ध्या गुणविधित्वनिश्चय इत्याशङ्क्य * बलवत्त्वेनेत्युक्तम् * उच्छब्दस्योर्द्धत्वे भिदेश्च विदारणे लोकव्याकरणयोः प्रसिद्धत्वादुद्भिच्छब्दस्य खनित्रेऽवयवप्रसिद्धिर्बलीयसी[१] प्रकाशनार्थतायास्त्वप्रसिद्धत्वाद्यागस्य चाबोधकत्वेन प्रकाशकत्वाभावात् उत्पादकत्वेनापि प्रकाशकत्वोपचारे सर्वकर्मणां स्वफलोत्पादकत्वेनोद्भिच्छब्दवाच्यतापत्तेर्यागे प्रसिद्धिर्दुर्बलेति भावः । गुविधौ त्विति भाष्यमभ्यधिकमर्थं विदधतइत्यवयवत्वेन प्रवृत्तिविशेषकरत्वमुक्तमर्थवन्तो भविष्यन्तीत्यनेन च प्रयोजनवत्त्वमित्येवं

१ बलवतीति २ पु० पा० ।

ख्याख्यातुं प्रयोजनवशेन चाधिकत्वात् * प्रवृत्तेश्चेत्युक्तम् * वि-शुद्देशान्तर्गतस्योद्भिदादिशब्दस्य गुणरूपमङ्गरूपं वाच्यमित्यनुष-ङ्गाध्याहाराभ्यां योज्यम्। किमर्थं तदुच्यतइत्यपेक्षायामाख्यातेन विधातुमिति * विधीयत * इत्यनेनोक्तं भाष्यमप्युद्भिद्गु-गतां यागस्याख्यातेन विधातुमुद्भिदादिशब्दो विधेयगुणस-मर्प्पक इत्येवं योज्यं धातूपसर्गरूपावयवशक्त्यनुसारेण ताव-दुद्भिच्छब्दस्योर्द्ध्वविदारणसाधनद्रव्यवाचित्वमुपपादयति * प्राति-पदिकमिति[1] * द्रव्यविषयायाः प्रसिद्धेर्बलीयस्त्वोपपादनार्थं न-चैषामिति भाष्यावयवं व्याचष्टे * न चेति * भिदिर्विदारणइति-वत् प्रकाशने स्मृत्यभावाद्यागस्याप्रकाशकत्वादौपचारिकप्रकाश-कत्वे सत्यप्यतिप्रसङ्गापत्तेरवयवप्रसिद्ध्योद्भिच्छब्दस्य यागार्थत्वा-योगात्समुदायप्रसिद्ध्या तदर्थता वाच्या न चासावस्तीति सूचना-र्थः समुदायशब्दः। ननु लोकप्रसिद्ध्यभावे ऽपि यजिसामानाधि-करण्याद्यागार्थतावगम्यतइत्याशङ्कानिराकरणार्थं न चेति भाष्याव-यवं सामानाधिकरण्यावगतस्यार्थस्य पारिभाषिकत्वाभावात् अ-युक्तमाशङ्क्य व्याचष्टे * न चेति * वैय्यधिकरण्येनापि यजिस-म्बन्धोपपत्तेः सामानाधिकरण्येन यागार्थत्वस्यावगन्तुमशक्यत्वा-दलौकिकार्थकल्पना पारिभाषिकी आपद्येत सा च सम्बन्धस्याशास्त्र-हेतुत्वादित्यैन्द्र्यधिकरणसूत्रावयवेन निरस्तत्वादयुक्तेत्याशयः। तृतीयया चोद्भिच्छब्दार्थस्य करणत्वावगतेर्द्रव्यस्यैव च करणत्वोपपत्ते-स्तदनुसारेणापि उद्भिच्छब्दस्य द्रव्यवाचितावसीयतइत्याह * तृती-यापि चेति * ननु यागस्यापि फलोद्भेदनहेतुत्वात्फलभावनाकरण-त्वाच्च तद्वाचित्वे ऽप्यवयवप्रसिद्धिस्तृतीया च न विरोत्स्यतइ-त्याशङ्क्याह *न चेति[2]* यागस्योर्द्ध्वविदारकत्वं प्रकाशकत्वं वा ता-वन्नास्त्येव करणत्वं तु विधिसामर्थ्यगम्यमपि कर्तृव्यापार-व्याप्यत्वरूपकर्मत्वापेक्षत्वेन ततो दौर्बल्यात्तेनाभिभूतं सन्न तृती-योत्पादनक्षममिति प्रसिद्धशब्देन प्रकृष्टत्वेन कर्मत्वात् बलीयस्त्वेन न सिद्धं यतस्तेनाभिभवितुं न शक्यतइत्यभिधानात्सूचितम्। कुठा-रादीनां तु छेदनादौ करणत्वात् उद्यमनादौ च कर्म-त्वाद्भिन्नविषयत्वेनाविरोधादनभिभूतं करणत्वं तृतीयोत्पादन-क्षममित्याशयः। नन्वर्थवन्तो भविष्यन्ति इतिभाष्यावयवेनार्थवत्त्व-स्य तृतीयोपपत्तित्वेनोक्तत्वात् प्रयोजनवशेन चेति द्वितीयोपपत्ति-

१ प्रातिपदिकं तावदिति २ पु० पा०।

२ न च यागस्येति पु० पा०।

त्वेन व्याख्या न युक्तेत्याशङ्क्याह * अर्थवत्त्वादिति * प्रवृत्तिविशेषकरत्वोपपत्तित्वद्योतनार्थं तृतीयया युक्त्या प्रागस्य व्याख्येत्याशयः । प्रवृत्तिविशेषकरत्वं व्याचष्टे * विधायकेति * द्रव्यविशिष्टक्रियाविषयप्रवृत्तिहेत्वभिधाने ऽपि विधेयसमर्पणे द्रव्यविशिष्टक्रियानुष्ठाने च यथाक्रमं प्रवृत्तौ विशेष इत्यर्थः । ननु नामधेयत्वे ऽपि संज्ञाविशिष्टे कर्मणि प्रवृत्तेराधिक्यरूपो विशेषो ऽस्तीत्याशङ्क्याह * अन्यथा हीति * विधिविशेषादेव यागविशेषसिद्धेर्ना[illegible] यस्यानतिरिक्तार्थत्वात् । अनुच्चारिते तस्मिन्यावती विधायक[illegible] प्रवृत्तिस्तावत्येवोच्चारिते ऽपि स्यादित्यर्थः । उद्भित्पदस्यानु[illegible] प्रवृत्त्ययोगे ऽप्याधिक्याभावं त्रयाणां तुल्यं वक्तुमेषामिति [illegible] नम् प्रसिद्धेर्वार्थवत्त्वोपपत्तित्वसूचनार्थं प्रागर्थवत्त्वव्याख्येत्य[illegible] अथ वेति * प्रसिद्धस्यापि लोष्टादेर्निःप्रयोजनत्वात् प्रसिद्धेः [illegible] जनवत्त्वोपपत्तित्वासम्भवमाशङ्क्याभिधेयवाचित्वेनार्थशब्दव्या[illegible] नमुद्भित्पदस्य गुणे प्रसिद्धत्वात् विधेयगुणसमर्पकस्य सत[illegible] त्वमित्यर्थः । अस्मिंस्तु व्याख्याद्वये गुणविधौ हेतुद्वयापत्तेः [illegible] द्वयादिभिः पूर्वपक्ष इति श्येनाधिकरणभाष्ये बहुवचनानुपपत्ति[illegible] नापरितोषाद्धेतुभेदे ऽपि प्रवृत्तिविशेषकरत्वे ऽपि प्रयोजनातिरेकस्यैवोपपत्तित्वं सूचयितुं प्राक् व्याख्येति पारमार्थिकम् । व्युत्क्रमव्याख्याभिप्रायं दर्शयितुमाह * अथ वेति * नन्वेवं पृथगस्य हेतुत्वे अर्थवत्त्वेनैवोद्भित्पदस्य प्रवृत्तिविशेषो दर्शितः । किमपरमस्य प्रवृत्तिविशेषोपन्यासेनेति*आह ततश्चेति* स्वात्मनि क्रियाविरोधादौपचारिकभेदाश्रयणेनोद्भित्पदमात्मनः प्रवृत्तिविशेषकरम्प्रागुक्तमित्यपरितोषादिह विधिपुरुषयोरित्युक्तम् । नामधेयानर्थक्यप्रतिपादकं यदि चेति भाष्यमाक्षिपति * नन्विति * सामर्थ्ये * नैतदिति * श्लोकं व्याचष्टे * यदेति * किमपरमित्यनेन धातूक्तैव यागव्यक्तिर्नाम्नाभिधेया ततश्चानर्थक्यमित्येवं सा चेति व्याख्यातम् । अथेत्यनेन जातिश्चेद्धातुनाश्रिता ततः सामानाधिकरण्यात्तन्नामतैव प्रसज्येत सा चानिष्टेत्युत्तरा ऽवयवो व्याख्यातः विशेषस्यान्यतः सिद्धिं सिद्धान्तिनो ऽप्यभिमतां दर्शयति * सिद्धत्वादेव चेति * विशेषस्यान्यतो ऽसिद्धौ तत्प्रतिपत्त्यर्थं नामधेयस्यावश्यविधेयत्वापत्तेस्तन्निरासो न युज्येत इत्याशयः। ननु विशेषसिद्धेर्नामधेयाधीनत्वे ऽप्यवयवशक्त्यनुसारेणैव कर्मण्यपि प्रवृत्तिसिद्धेः । संज्ञासंज्ञिसम्बन्धविधिनिरासार्थं तद्भाष्यमित्याशङ्क्याह * यदा चेति * संज्ञासंज्ञिसम्बन्धविधिशून्येन लौकिकेनावयवशक्त्यनुसाररूपेणापि प्रका-

which was in pu... policy of Nehruism, which is subservience to Gandhian inactivity and sabotage of mass struggle and therefore, support to Rajaji's policy of surrender to imperialism and betrayal of the people,

...defence of the Soviet,"... by any local or national consider-ations. Every Communist Party sought to mobilise the workers and the people under the slogan "End The War" and to overthrow the government in its own country and replace it by a peoples' government which would renounce imperialist aims and join up with the USSR in fighting for peace and for isolating the remaining imperialist aggressors. Similarly as soon as the Soviet Union was attacked by Hitlerite Germany in the midst of the imperialist war, the Communist Parties were required to recognise that the war waged by Britain against Germany became at once a part of the defence of the USSR. They therefore have to support it and strive to wage it in such a way that it ensures Soviet victory and the defeat of Hitler-fascism. The Communist Parties in all countries were required to recognise that Hitler-fascism was the main enemy and the war waged by the USSR in alliance with Britain and America was a war which had to be won by all the peoples in the interests of defending the base of the world—revolution. This duty and attitude was imposed by the internationalism, of our party. No national or local conditions could render it invalid'.

The concern for 'the only Fatherland' was thus the ...

HOME DEPARTMENT

-165-

PEOPLE'S WAR - December 31st.

PEOPLE'S WAR has found an obvious subject in the recent publicity given to Chinese Communists (pages 1 and 2). There is a return to the food and health situation in Orissa on page 4, but this is not objectionable. On the centre page, the Communists make great efforts to show some form of alliance with the Congress.

(Signed)
5.1.45.
UNDER SECRETARY

Addl Secy — It is significant how stubbornly they are sticking to the Congress in spite of the many rebuffs they have received
(Signed) R. Tottenham
6.1

for H.O. Robinson.

Home Department (Addl. Secretary).
D.I.B. U/O No. 22/3.Genl/40-III, dated 2...
3559/41...
Encl.1.
L.1.7.

The ... reaction to the Soviet's entry into the war against Germany is interesting.
(Signed) R. Tottenham

*Richard Tottenham's notings on the Communists' dilemma vis-a-vis the Congress defence interest in the Soviet entry into the War against Germany*

purpose of warning them that it (the jail document) does not give them all the tactics and arguments with which they must be armed ... across among ...



Apart from crass ... treachery, four th... in this episode.

Fi...

...y to do likewise. The ...does this just because it recognises barriers, no nation, no Fatherland Soviet.

... single out the main enemy on the ... front, failure to recognise the ... in the enemy of the Soviet Union, ... decide your immediate attitude ... national oppressor in the interna... in terms of his attitude towards ... is to join the most reactionary ... an assault against the Soviet, to ... common front against her, and to ... bourgeois-nationalism, is to betray ... into the hands of counter... gangs'.

... October 1941 the Party had been

... for the British Communists to ... the war effort and to intensify it. ... tical line they have to follow to ... Anglo-Soviet agreement to a ... the British and Soviet people by ... ill convert imperialist war into a ... war. We in India, to reach the ... have to adopt a different tactic... do so by combining a popular ... Campaign" with our intensi... against imposed war efforts, with ... struggle for freedom and demo...

... ence, more emphatic if that is ... the opposite:

...—"Right" for British workers ... ians?: Just because the issue is ... proletariat versus Nazi imperial... ... proletariat and with it the ...

... war into a civil war", for he ... r is no more an imperialist one. It knows ... is nationally enslaved in spite of democratic rights and a parliamentary government. It is good to remember that bourgeois-democracy is another name for proletarian enslavement. There is as much distance between proletarian freedom and bourgeois-democracy as between democracy and imperialism in the colonies. If the British and American proletariat were to declare war against their own bourgeoisie—a civil war—they will play the game of the Cliveden Set and the Isolationists.

'It is stupid to think that it is right for the British workers to support the war, for they are "Free". They are not free. "Right" because they have got democracy? If the war had not been for peoples' liberation and the role of British imperialism in this war had not changed, it would have been the height of opportunism to support it.

'It is just because the international role of British imperialism has temporarily changed, it is just because a distinction could be made between Nazi and British imperialism in view of its alliance with the Soviet, that it becomes the revolutionary duty of the British Communists to concentrate fire on Nazism and not on their home-made imperialism. But for this reversal of roles, the British workers could not have supported "its own government" in the war, notwithstanding the "democracy" in Britain.

'To draw ... ns between the British and Indian ... the score of democratic rig... ...ilty of breaking the ...

...pletely wrong policy to the war in the present ... because it forsook the standpoint of proletarian internationalism and adopted unconsciously that of bourgeois nationalism. It failed to see that the character of the war waged by Britain jointly with the USSR and the duty of the Indian proletariat towards it, could not be determined by the relation in which the Indian people stood to Britain but by her relation to the fortress of Socialism and to the main enemy of the world proletariat. We looked at the war from the point of view of narrow bourgeois-nationalism and theorised that Britain was still conducting an imperialist war and that real aid to the Soviet people could be rendered by the British and the Indian people only when a peoples' government was established in Britain and freedom was won by the Indians. We repeated parrot-like pharases like "Hitler is the main enemy", and said that the imperialist war has to be completely transformed into a peoples' war, but stuck fast to the bourgeois-nationalist slogan that India could help the Soviet Union only as a free country. We lapsed into all manners of speculations and refused to see the blunt fact that the war was already a peoples' war because we did not look at the war from the standpoint of internationalism and from the standpoint of the defence of the Soviet Union.

'Failure to see that it was now a peoples' war led us to put forward the slogan "our freedom first and then we will fight for the Soviet", which was in practice the policy of Nehruism, which is subservience to Gandhian inactivity and sabotage of mass struggle and therefore, support to Rajaji's policy of surrender to imperialism and betrayal of the people ...

